# ॐ ओरियण्टल कालेज मेगज़ीन ॐ

भाग २० | संख्या १ | नवम्बर १९४३ | क्रमसंख्या ७४

भाग सम्पादक

डाक्टर लक्ष्मणस्वरूप एम. ए., डी. फ़िल. ( आक्सफ़ोर्ड ),
आफ़िसर अकेडेमी (फ्रांस), प्रिंसिपल, ओरियण्टल कालेज, लाहौर।

सूचना

सम्पादक लेखकों के लेख का उत्तरदाता नहीं होगा।

प्रकाशक—मि० सदीक अहमद खां।

श्रीकृष्ण दीक्षित प्रिंटर के प्रबन्ध से बाम्बे मैशीन प्रेस, मोहनलाल रोड,
लाहौर से मि० सदीक अहमद खां रजिस्ट्रार ओरियण्टल कालेज
लाहौर के लिये छापा।

॥ ओरियण्टल कालेज मेगज़ीन ॥

# विज्ञप्ति

उद्देश्य—इस पत्रिका के प्रकाशन का उद्देश्य यह है कि प्राच्यविद्या-सम्बन्धी परिशीलन तथा तत्त्वानुसन्धान की प्रवृत्ति को यथासम्भव प्रोत्साहन दिया जाय और विशेषतः उन विद्यार्थियों में अनुसन्धान का शौक पैदा किया जाय जो संस्कृत, हिन्दी और पञ्जाबी के अध्ययन में संलग्न हैं।

किस प्रकार के लेखों को प्रकाशित करना अभीष्ट है—

यत्न किया जायगा कि इस पत्रिका में ऐसे लेख प्रकाशित हों जो लेखक के अपने अनुसन्धान के फल हों। अन्य भाषाओं से उपयोगी लेखों का अनुवाद स्वीकार किया जायगा और संक्षिप्त तथा उपयोगी प्राचीन हस्तलेख भी क्रमशः प्रकाशित किए जायंगे। ऐसे लेख जो विशेषतः इसी पत्रिका के लिए न लिखे गए हों, प्रकाशित न होंगे।

प्रकाशन का समय—

यह पत्रिका अभी साल में चार बार अर्थात् कालेज की पढ़ाई के काल के अनुसार नवम्बर, फरवरी, मई और अगस्त में प्रकाशित होगी।

मूल्य—

इसका वार्षिक चन्दा ३) रुपये होगा; विद्यार्थियों से केवल १॥) लिया जायगा।

पत्र-व्यवहार और चन्दा भेजना—

पत्रिका के खरीदने के विषय में पत्र-व्यवहार और चन्दा भेजना आदि प्रिंसिपल ओरियण्टल कालेज लाहौर के नाम से होना चाहिये। लेखसम्बन्धी पत्र-व्यवहार सम्पादक के नाम होने चाहिएं।

प्राप्तिस्थान—

यह पत्रिका ओरियण्टल कालेज लाहौर के दफ्तर से खरीदी जा सकती है।

पञ्जाबी विभाग के सम्पादक सरदार बलदेवसिंह बी. ए. हैं। वही इस विभाग के उत्तरदायी हैं।

---

नोट—इस पत्रिका में कागज़ कण्ट्रोल रेट पर मैसर्स रामलाल कपूर एण्ड सन्ज़ एजेण्ट टीटागढ़ पेपर मिल्ज़ अनारकली लाहौर से लेकर लगाया गया है।

## विषय-सूची

अथ

अप्रकाशितपूर्वा

# श्रीवराहमिहिराचार्यविरचिता

# योगयात्रा

## प्रथमोऽध्यायः ।

श्रीगणेशाय नमः ।

एम० ए०, एम० ओ० एल० इत्युपाधिजुषा जगदीशशास्त्रिणा सङ्कलितम् ।

यश्चक्षुर्जगतः[1] सहस्रकरवद्धाम्नां च जन्मार्कव-[2]

न्मोक्षद्वारमपावृतं च रविवद् ध्वान्तान्तकृत्सूर्यवत् ।

आत्मा सर्वशरीरिणां सवितृवत्तिग्मांशुवत्कालकृत्

साध्वीं नः स गिरं[3] करोतु सविता योऽन्यैरतुल्योपमः ॥१॥

वक्ष्यामि भूपमधिकृत्य गुणोपपन्नं

विज्ञातजन्मसमयं प्रविभक्तभाग्यम् ।

अज्ञातसूतिमथवा[4] विदितैष्यभाग्यं

सामुद्रयात्रिकनिमित्तशतैः पृथूक्तैः[5] ॥२॥

कर्मान्यजन्मनि कृतं[6] सदसच्च दैवं

तत्केवलं भवति जन्मनि सत्कुलाढ्ये ।

बाल्यात्परं विनयसौष्ठवपात्रतापि[7][8]

पुंदैवजा कृषिवदित्युत उद्यमेत[9] ॥३॥

सामन्तकालवसुधोद्यममन्त्रभृत्यै-

र्दैवेन चेति कृषिवन्नृपतेः फलाप्तिः ।

स्याच्छिद्रमेकमपि चेत्तत एव सर्वं

नाशं प्रयाति हि दृतेश्चरणादिवाम्भः ॥४॥

महर्त्ततिथ्युड्मराशिहोरा-

द्रेष्काणभागाद्यनुकूलमात्रं

---

१. यच्चक्षु० for यश्चक्षु० P, P1 २. धामा० for जन्मा० P1, K. ३. स मतिं तनोतु for स गिरं करोतु P1. ४. अज्ञातजन्मसमयं for अज्ञातसूतिमथवा P1. ५. पृथक्तैः for पृथूक्तैः P, P1. ६. जन्मजनितं for जन्मनि कृतं P1, K. ७. सूनृत० for सौष्ठव० P1. ८. च for ०पि P. ९. ०दित्युपपाद्यमेतत् for दित्युत उद्यमेत P.

भवेद् यियासोर्यदि सिद्धिहेतुः
स्वयं भवेद् दैवविदेव राजा ॥५॥

मन्त्राभिषेक[1]मणिबन्धनशान्तिकर्म-
होमोपवाससुरयागजयादिमात्रम्।
स्यात्सिद्धिहेतुरथ चेद्विजिगीषतोऽरीन्
कस्मात्तदा नरपतिर्न भवेत्पुरोधाः ॥६॥

बुद्ध्वाऽर्थशास्त्राण्यपि मन्त्रिणोऽपि
कुर्युः प्रणामं[2] न नरेश्वराणाम्।
यथा[3]भिजात्यद्विपवाजिपत्ति-
कोशाद्यपेक्षा न भवेत्प्रधाना[4] ॥७॥

स्वदेशे सन्तुष्टः करितुरगकोशे सति न यो
भवेद् यायी सोऽन्यैः कृतपरिभवो याति विलयम्।
स्वचक्रेणैवासौ क्षपितधनराष्ट्रो भवति वा
गतोऽन्यानादत्ते[6] सुनयचरितो नीतिविधुरान् ॥८॥

उलूकस्य ध्वांक्षो निशि बलभुजां सोऽह्नि वशगः
स्थले नक्रं सिंहो मृगपमुदके हन्ति जलजः।
अबुद्ध्वा यः कालं व्रजति नृपतिर्देशमथवा
हृते दर्पे वाक्यं स्मरति विदुषां सोऽरिवशगः ॥९॥[7]

रिपोः कृत्वाऽवज्ञां जितमिति विदित्वा मद्बला-
न्न यत्नो हातव्यः शिखिविवरसमोऽल्पोऽपि हि रिपुः।
प्रमत्तोऽद्रेः कुञ्जादयुतबलभागैरपि नरै-
र्हतो बद्धः स्तम्भे कषति मदलेखां द्विपपतिः ॥१०॥

वप्रप्राकारयन्त्रप्रहरणपरिखातोयधान्येन्धनाढ्यं
दुर्गं कृत्वा प्रगुप्तं[8] द्विपतुरगभिषक्छिल्पि[9]विप्राभ्युपेतम्।

---

१. ०भिशेष P., P1. २. प्रमाणं for प्रणामं P1. ३. यथा for यथा K. ४. प्रजानाम् for प्रधाना P1 ५. The Ms P1 is wanting in leaf 2., i. e. the portion from रितुरगकोशे to नृपवल्लभतस्करे (V 18). is missing in P1. ६. गतो यो नादत्ते for गतोऽन्यानादत्ते P. ७. The verse 9 is missing in K. ८. कृत्वात्मगुल्म० for कृत्वा प्रगुप्तं K. ९. ०विषशिल्पि० for ०भिषक्छिल्पि० P.

लुब्धत्रस्ताभिमानिप्रकुपितकुभृताह्वालशीलैर्विहीनं

कृत्वा शूराप्तसंस्थं परविषयमियाच्छुद्धपार्ष्णिर्नरेन्द्रः ॥११॥

बुद्ध्वा शक्तिं स्वपरबलयोः सामभेदप्रदानैः

कृत्वोपायैर्व्यसन[1]समरोपायसंरक्षणैश्च[2] ।

भक्त्या[3] साधून् धनविरहितानर्थलुब्धांश्च दानैर्

भेद्यान्[4] भेदैस्त्रिभिरपि न ये साधयेत्तांश्च दण्डैः ॥१२॥

साम्नो जीवः [5]सभृगुतनयो दण्डनाथौ कुजार्कौ

दानस्येन्दुः शिखियमबुधाः सासुरा भेदनाथाः ।

वीर्योपेतैरुपचयकरैर्लग्नगैः केन्द्रगैर्वा

तत्तत्सिद्धिं व्रजति तदहः स्वांशकैर्वापि तेषाम् ॥१३॥

षाड्गुण्ये सन्धिरादौ परिपणरचितो विग्रहोऽस्यापकारी

नेतौ चेदासनं तत्परपुरगमनं सर्वसैन्येन यानम् ।

सैन्यार्द्धेनाभियुङ्क्ते परपुरमपि [6]चेत्तद् द्विधा यानमुक्तं

संश्लेषोन्यत्र यः स्यात्स खलु निगदितः संश्रयोऽन्यो[7] गुणानाम् ॥१४॥

मध्याह्नेऽर्कस्तुहिनकिरणो नित्यमाक्रन्दसंज्ञः

पौरः पूर्वं भवति दिनकृद् [8]यायिसंज्ञोऽन्यसंस्थः[9] ।

जीवः सौरिस्तुहिनकिरणस्यात्मजश्चेति पौराः

केतुर्यायी स भृगुजकुजः सिंहिकानन्दनश्च ॥१५॥

यानं यायिभिरासनं शुभकरैर्वीर्यान्वितैर्नागरै-

र्द्वैधीभावमयाद् यदा शुभकराः पौराः सयायिग्रहाः ।

सौम्यैः सन्धिरसद्ग्रहैश्च बलिभियुद्धेऽनुकूलैर्जयः[10]

सर्वैरन्यशुभप्रदैर्नरपनिर्दैवा[11]न्वितं संश्रयेत् ॥१६॥

कोशो हि राज्यतरुमूलमतोऽस्य शाखाः[12]-

पक्षी विपक्ष इव किं विधनः करोति ।

१. ०गमन० for ०व्यसन० P. २. ०संसर्पणैश्च for ०संरक्षणैश्च P. ३. साम्ना K. ४. नेयान for भेद्यान P. ५. सभृगुज० for सभृगु० P. ६. यत् for चेत् P. ७. संश्रयोऽन्त्यो for संश्रयोऽन्यो K. ८. योपि० for यायि० P. ९. ०ऽन्त्यसंस्थः for ०ऽन्यसंस्थः K. १०. ०कूलैर्जयः for ०कूले जयः K. ११. पति दैवा० for ०पनिर्दैवा० K. १२. शाखा P. P1.

[1] अथादिदैवेन्द्रियगणो वसुतस्तथाऽन्नं
तत्प्राप्तिरत्नयाविवृद्धिषु यत्नवान् स्यात् ॥१७॥
नीचाच्चिराढ्य[2]नृपवल्लभतस्करेभ्यो[3]
राष्ट्रं नृपेण परिर[4]क्ष्यमतोऽस्य कोशः ।
काले करग्रहणं च यथोचितानां
तन्नार्थयेद्[5]भवति येन जनापवादः ॥१८॥
यात्रा नृपस्य शरदीष्टफला मधौ च
छिद्रे रिपोर्न नियमोऽत्र[5] च केचिदाहुः ।
छिद्रेऽप्यरेर्भवति दैवयुतस्य सिद्धिः
सामान्यमामिषमिदं प्रतिभूमिपानाम् ॥१९॥
शत्रोर्वधाय सचिवं शु[6]भदैवयुक्त-
माज्ञापयेन्नृपतिरात्मनि दैवहीने ।
जह्यान्न चार्थमपि दैवपरोऽपि भूत्वा
दृष्टे द्विपे द्विपपदानुसृतिः किमर्थम् ॥२०॥
कालोऽभ्युपैति सकृदेव परं [7]कथञ्चित्
प्राप्नोति तन्न समयं[8] खलु कालकाङ्क्षी ।
कालेन गोचरगताननपेक्ष्य भक्षान्[9]
मन्दक्रमोऽप्यजगरः समुपैति सिद्धिम् ॥२१॥
दुर्गस्थितं फलमपक्वमनल्पयत्नात्[10]
संसिद्धमभ्युपकरोति गुणं न पुंसाम् ।
साधारणं स्वपतितं च भवेद् यतोऽतः
कालेऽभियुक्तपतितं रसवत्सुखाय ॥ २२ ॥

इति श्रीवराहमिहिराचार्यकृतायां योगयात्रायां दैवपुरुषकाराध्यायः प्रथमः ॥

१. ०दिग्वेन्द्रिय० for ०दिवेन्द्रिय० P. २. च्चिराय for चिराढ्य० P. ३. The leaf 3a of the Ms. P1 begins with भ्यो राष्ट्रं नृपेण ४. र is missing in P1 ५. ०स्ति for ०त्र P., K. ६. भ is missing in P1. ७. कदाचित् for कथञ्चित् P1. ८. स पुनः for समयं K. ९. भक्ष्यान् for भक्षान् K. १०. ०यत्नं for यत्नात् P1, K.

## द्वितीयोऽध्यायः ।

रक्तासिताद्या हि यथाम्बरस्य
वर्णाः सितस्यैव भवन्ति सम्यक् ।
विलम्बतिथ्यादिगुणास्तथैव
विशुद्धदोषस्य भवन्ति धातुः ॥ १ ॥

मद्याङ्गनावादितनृत्यगीता[1]-
न्यद्यो[2] वृथाट्या मृगया यनिद्रा ।
परोक्षनिन्देति च कामजानि
दशैव विन्द्याद् व्यसनानि पुंसाम् ॥ २ ॥

वाक्पारुष्यं दण्डपारुष्यमीर्ष्या
द्रोहोऽसूया पैशुनं साहसं च ।
अर्थस्योक्तं दूषणं चाष्टसंख्यः
क्रोधोद्भूतो वर्ग एष प्रदिष्टः ॥ ३ ॥

महादिदमनयानामास्पदं मद्यमाहु-
स्तनुधनमतिसत्त्वश्रेयसां कर्षणाय ।
समुपहतमतिस्तत्र तत्प्रधानेन्द्रियत्वा-
द्गणयति नहि भक्ष्याभक्ष्यमन्यानि चैवम् ॥ ४ ॥

पत्नीयत्यपि मातरं मद्वशात्पत्नीं च मात्रीयति
श्वभ्रीयत्यपि मन्दिरं श्लथशिलं कूपं च गेहीयति ।
स्वल्पं वायुं दधीयतीश्वरगणां मोहात् स्थलीयत्यपि
मित्रीयत्यपि पार्थिवं किमपरं कुर्यान्न यन्मद्यपः ॥ ५ ॥

भूयोऽपि दीव्यति जितो जयलिप्सयैव
प्राप्नोति तत्र[3] सविशेषतरं कदाचित् ।
कृत्वा प्रियाणि मदतः परितप्य चान्ते
भूयः पिबेत्किमपि दोषविशेषकाङ्क्षी ॥ ६ ॥

अभ्यागमोत्सवभिषग्वचनोपदेशैः
कामं पिबेदमतिलोपकृदप्रकाशम्[4] ।
द्यूतं विनेन्द्रियसुखानि हितानि युक्त्या
विज्ञस्य[5] जीवितफलं विषयैर्विना किम् ॥ ७ ॥

---

१. गीतनृत्या० for नृत्यगीता० Pı. २. ०न्यद्वा for ०न्यद्यो PI,K. ३. तत्त्व for तत्र K. ४. ०कृदप्रकामं for कृदप्रकाशं Pı,K. ५. शून्यस्य for विज्ञस्य Pı,शून्यं हि K.

शौचाचारविवर्जित: शत्रु इव त्यक्त: सुहृद्बान्धवै-
निश्शङ्को निरपत्रपो गतघृणः कृच्छ्रादवाप्ताशनः ।
बन्धुर्नास्य[१] निबन्धनं न शपथो[२] लोकद्वयं नेक्षते
मायावी कुलपांसुलश्च[३] कितवो दोषाकरो[४] निस्सुखः ॥८॥

दैवज्ञमन्त्रिसुहृदाप्तवचांसि राजा
यो नाद्रियेत [५]मतिचेष्टितदुष्टबुद्धिः ।
सोऽग्रेसरेण रहितोऽन्ध[६] इवाचिरेण
हास्यत्वमेति पतितो[७] विषये रिपूणाम् ॥ ९ ॥

मेधावी मतिमानदीनवचनो दक्षः क्षमावानृजु-
धर्मात्माऽप्यनुसूयको[८] लघुकरः[९] षाड्गुण्यविच्छक्तिमान् ।
उत्साही पररन्ध्रवित्कृतधृतिर्वृद्धिक्षयस्थानवि-
च्छूरो न व्यसनी स्मरत्युपकृति[१०] वृद्धोपसेवी च यः ॥१०॥

परीक्ष्यकारी न विकत्थनश्च दृढप्रतिज्ञोऽतिदृढप्रहारी ।
जितेन्द्रियः स्याज्जितकोपलोभनिद्रालसस्थानपरिग्रहश्च ॥११॥

त्यागी विनीतः प्रियदर्शनश्च [११]व्यपेतमोहः प्रतिपत्तियुक्तः ।
देशस्य कालस्य च भागविज्ञः[१२] स्वयं च यः स्याद् व्यवहारदर्शी ॥१२॥

शब्दार्थविन्यास[१३]पटुः प्रगल्भः संग्रामविद्याकुशलोऽभिजातः ।
स्मिताभिभाषी मित[१४]सत्यवक्ता दैवान्वितो यश्च स धाम लक्ष्म्याः ॥१३॥

( चतुर्भिः कलापकम् )

गुणैः समस्तैरपि सम्प्रयुक्ता कन्येव यात्रा विगुणाय दत्ता ।
करोत्यकीर्ति सुखवित्तहानि[१५] पात्रान्तरज्ञानजडस्य दातुः ॥१४॥

गुणान्वितस्यैव गुणान् करोति यात्रा शुभक्षमहलग्नयोगात् ।
व्यर्था सदोषस्य गुणान्वितापि वीणेव शब्दाश्रयवर्जितस्य ॥१५॥

---

१. ०र्नस्यति for ०र्नास्य नि० P1. २. शयथा P. ३. ०पांशुनश्च for पांसुलश्च P1., पांशनश्च K. ४. दोषार्णवो for दोषाकरो K. ५. ०येन्निजमति for येत निज० P, P1. ६. यो नायकेन रहितोन्ध० for सोऽग्रेसरेण रहितोऽन्ध० P1., सन्नायकेन रहितो० K. ७. नृपतिः for पतितो P1. ८. ०त्वनु० for ०प्यनु०K. ९. लघुतरः for लघुकरः P1. १०. ०कृतं for ०कृतिं P1. K. ११. व्यापेत० for व्यपेत० K. १२. ०विद् यः for ०विज्ञः P1, K. १३. ०विन्न्याय० for ०विन्यास P1, K. १४. ०मित्र० for ०सत्य० P1, K. १५. ०हीनो for ०हानि P1., K.

यात्रा विशुद्धापि समं प्रवृत्ता पात्रानुरूपाणि फलानि धत्ते ।
अगत्युदीर्णापि तु कौशिकस्य भा भानवी नैव तमः प्रमार्ष्टि ॥१६॥
विचिन्त्य कार्याणि निशावसाने द्विषत्सुहृन्मण्डलसंश्रितानाम् ।
बलार्थदेशेषु[1] नियोजितानां[2] समाश्रितानां च कृताकृतानि ॥१७॥
अनाश्रितः ख्यातगुणः परोऽपि शूरोऽथवा साधुजन[3]प्रशस्तः ।
सम्पूजनीयो जनसंग्रहार्थं ममेति देशोपगतो विचिन्त्य ॥१८॥
सवेणुवीणापणवस्वनेन गीतेन पूर्वं व्यपनीतनिद्रः ।
शय्यां त्यजेत्तूर्यरवावसाने शृण्वन् गिरो मङ्गलपाठकानाम् ॥१९॥
अज्ञातपूर्वाणि न दन्तकाष्ठान्यथात्र पत्रैश्च समन्वितानि ।
न चोर्द्ध्वशुष्कानि[4] न पाटितानि न युग्मपर्वाणि[5] विना त्वचा च ॥२०॥
उदङ्मुखः प्राङ्मुखसंस्थितो वा भक्षयेत् तच्च वितस्तिमात्रम् ।
अथाग्नरेन्द्रो विनियम्य[6] वाचं प्रक्षाल्य जह्याच्च [7]शुभप्रदेशे ॥२१॥
अभिमुखपतितं प्रशान्तदिक्स्थं शुभमतिशोभनमूर्द्ध्वसंस्थितं [8]यत् ।
अशुभकरमतोऽन्यथा यदिष्टं स्थितपतितं च करोति [9]मृष्टमन्नम् ॥२२॥
प्रणम्य देवांश्च[10] गुरूंश्च पूर्वं[11] दत्त्वा च गां वत्सयुतां द्विजाय ।
दृष्ट्वा मुखं सर्पिषि दर्पणे च[12] नक्षत्रमादौ शृणुयात्तिथिं च ॥२३॥
श्रुत्वा तिथिं भं[13] ग्रहवासरं च प्राप्नोति धर्मार्थयशांसि सौख्यम् ।
आरोग्यमायुर्विजयं सुतांश्च दुःखप्रघातं[14] प्रियतां च लोके ॥२४॥
[15]दूर्वेभदानाञ्जननीर्थतोयमृद्रोचनासर्षपपुष्पगन्धान् ।
सिताम्बरोष्णीषसुवर्णरत्नान्यासेव्य कुर्याद्द्विजपजां वचांसि ॥२५॥
स्मितप्रसन्नप्रथमाभिभाषितैः प्रसाददृष्ट्या करसम्परिग्रहैः ।
यथाभिरूपं हृदयान्यपि द्विषां प्रसादयन् धर्मसभां समाश्रयेत् ॥२६॥
विनीतवेषाभरणः स[16] दक्षिणं करं समुद्यम्य विचक्षणान्वितः ।

---

१. वाला० for बला० P1, K. २. च for नि K. ३. साधुजनः for साधुजन P1. ४. न युग्मपर्वाणि for न चोर्द्ध्वशुष्कानि P1, K. ५. नचोर्द्ध्वशुष्कानि for न युग्मपर्वाणि P1, K. ६. विनिगृह्य for विनियम्य K. ७. शुचौ for शुभ० P1, K. ८. P. adds one च before यत् । ९. मिष्ट० for मृष्ट० K. १०. देवान् स्व for देवांश्च P. ११. सर्वं for पूर्वं P., P1. १२. वा for च K. १३. च for भं P1. १४. दुःस्वप्न for दुःखप्र P1, K १५. पूर्वभदानीं for दूर्वेभदाना० P, १६. भरणश्च for भरणः स P.

सुखोपविष्टः स्थित एव[1] वा नृपः समाश्रिमित्रो व्यवहारदर्शने ॥२७॥
समान्वितोऽस्मीति विचिन्त्यमेतद् दण्ड्येषु दण्डक्षमया न धर्मः ।
दण्डप्रभावो हि[2] स दुर्जनस्य हस्ते न यज्जीवति[3] साधुवर्गः ॥२८॥
सुतरामभिवर्धतेऽभिमानो नीचानां क्षमयान्वितेषु यस्मात् ।
अत उग्रतरेण ते निवर्त्या [4]येनान्येऽपि खलास्तथा न भूयः ॥२९॥
यस्मिन् गृहीते सदृशापराधो महाजनस्त्रासमुपैति तस्मिन् ।
दण्डो निपात्यो मनुजेश्वरेण कालान्तरेऽन्यद् व्यपदिश्य कार्यम् ॥३०॥
द्विरद इव मदेन विप्रयुक्तो
विषरहितो भुजगो ऽसिरिव कोशः ।
परिभवमुपयाति नापराधे
यदि मनुजाधिपतिः करोति दण्डम् ॥३१॥
एकस्य तुल्योदरपाणिपादा दण्डात्प्रभीताः[5] प्रणमन्ति मर्त्याः ।
अत्युग्रदण्डादपि चोद्विजन्ते दण्डोऽपराधप्रतिमः शिवाय ॥३२॥
दुष्टस्य दण्डः सुजनस्य पूजा न्यायेन कोशस्य च संप्रवृद्धिः ।
अपक्षपातोऽर्थिषु राष्ट्ररक्षा पञ्चैव यज्ञाः कथिता नृपाणाम् ॥३३॥
श्रान्तश्च तस्मिन् विनियुज्य साधून् सङ्ग्रामविद्यादिविभक्तकालः ।
सर्वाणि कार्याणि यथाक्रमेण कुर्यान्नृपः प्रत्यहमात्मवांश्च[6] ॥३४॥
राज्ञः कार्यं पञ्चमे[7] पञ्चमेऽह्नि क्षौरकर्म[8] वा श्मश्रु तस्योदये वा ।
त्यक्त्वा ताराः पञ्चसप्तत्रिपूर्वा[9] यात्राकाले नैव कुर्यान्न[10] युद्धे ॥३५॥
आचारस्थः[11] सागरान्तां धरित्रीं भुङ्क्ते दीर्घं कालमुत्खातशत्रुः ।
यत्राचारस्तत्र[12] धर्मस्य वृद्धिर्धर्माद्भोगान् देहभेदेऽपि भुङ्क्ते ॥३६॥
इति श्रीवराहमिहिराचार्यविरचितायां योगयात्रायामाचाराध्यायो द्वितीयः ॥

१. स्थितयेव for स्थित एव P. २. ०प्रभावौ स हि for ०प्रभावो हि स Pr. ३. यो जीवति for यज्जीवति P., Pr. ४. येचा० for येना० P. ५. दण्डस्य भीताः for दण्डात्प्रभीताः P. ६. The fourth Pada of this verse is missing in P. ७. पञ्चमं for पञ्चमे P. ८. क्षौरर्क्षे for क्षौरकर्म P. Pr. ९. सप्तपञ्च for पञ्चसप्त K. १०. कार्यं न for कुर्यान्न P. कार्यं च Pr. ११. आचरन् स्थः for आचारस्थः P. १२. ०स्तस्य for ०स्तत्र P., Pr.

# अथ तृतीयोऽध्यायः ।

अभिहितगुणासंयुतेन[1] राज्ञा कथितगुणात्ययसंस्थितोऽभियोज्यः ।
उपहृतमुपलभ्य वा[2] स्वदेशं बलमथवा निरुपद्रुतोऽभियुञ्ज्यात् ॥१॥

प्रचुरमशकयूकं मक्षिकादंशपूर्णां
प्रबल[3]जलदवृष्ट्या पांशुपाताहृतं वा[4] ।
पिशितरुधिरधान्यप्राणिवृष्ट्याहृतं वा[4]
करितुरगमनुष्या यत्र वा[5]ध्यानदीनाः ॥२॥

शब्दायन्ते मुहुरपि शिवा गर्दभध्वानतुल्या-[6]
स्त्यक्तस्नेहाः परिजनसुहृद्वाहनोपस्करेषु ।
कष्टं को नः शरणमिति वा वादिनो यस्य सैन्ये
विद्विष्टा वा प्रवरपुरुषाः सोऽभियोज्यो[7] नृपेण ॥३॥

निद्रालस्यावनतवदनाः केचन[8] स्वप्नशीला
भ्रष्टाचारा मलिनपुरुषच्छायया क्रान्तदेहाः ।
दीर्घश्वासाः सजलनयनाः शोकलोभाभिभूताः
सैन्ये यस्य द्विजगुरुसुहृद्द्वेषिणश्चैव योधाः ॥४॥

अकारणप्रोद्गतरोमकूपा जये निराशाः प्रकृतेरपेताः ।
अमङ्गलाचेष्टितजातहासाः सैन्ये नरा यस्य स चाभियोज्यः ॥५॥

कपोतकोलूकमधूनि यस्य समाश्रयन्ते ध्वजचामराणि ।
छत्रायुधादीनि[9] च सोऽभियोज्यो यस्याथवाऽनाहततूर्यशब्दाः ॥६॥

प्रतीपगत्वं सरितामिषोश्च शोषोऽथवाऽशोष्यजलाशयानाम्[10] ।
अवारिदेशे सलिलप्रवृत्तिरवैकृतं[11] चाप्सु तरच्छिला वा ॥७॥

भंगपातवलनान्यनिमित्तं रोदनानि च सुरप्रतिमानाम् ।
अग्निरूपमनलेन विना वा निश्चलानि च यदा प्रचलन्ति ॥८॥

प्रसूतिवैकृत्यमकालपुष्पाण्यरण्यसत्त्वस्य पुरप्रवेशः ।
प्रदोषकाले कृकवाकुशब्दा हिमागमे चान्यभृतः[12] प्रलापाः ॥९॥

दीर्घं दीनं संहताः सारमेयाः क्रोशन्त्युच्चैर्नित्यमेवानृतौ च ।

---

१. संज्ञेन for संयुतेन P1. २. चास्य for वा स्व P1. ३. बलम for प्रबल P1, K. ४. च for वा K. ५. वध्यानद्दीना for वा ध्यानदीनाः P1. ६. ०तुल्यं for ०तुल्या P; P1. ७. तेऽभियोज्या for सोऽभियोज्यो P. ८. केतन for केचन K. ९. ०णानि for ०दीनि K. १०. ०जलाश्रयाणाम् for ०जलाशयानाम् P1. ११. ०रवैकृते for ०रवैकृतं K. १२. ०भृतप्र० for ०भृतः प्र० K.

हन्युर्योषा योषितो निर्घृणाश्च[1] श्वेतः काको नक्तमिन्द्रायुधं वा[2]॥१०॥
तिला वितैला यदि वाद्धतैलाः सस्यस्य वृद्धिर्यदि वातिरिक्ता।
अन्नस्य वैरस्यमसृक् तरूणां शुष्कप्ररोहो विरुजां प्रणाशः॥११॥
विहाय सर्पाखुबिडालमत्स्यान् स्वजातिमांसान्युपभुञ्जते वा।
व्रजन्ति वा मैथुनमन्यजात्यां दीप्ताश्च नित्यं विहगा मृगाश्च॥१२॥
भङ्गः पातस्तोरणेन्द्रध्वजानां शीतोष्णानां व्यत्ययो भूविदारः।
निम्नोच्चानां तुङ्गता निम्नता[3] वा छाया [4]चार्कस्याभिमुख्येन याता॥१३॥
[5]अह्नातिरिक्तः पवनोऽतिचण्डो गन्धर्वसंज्ञस्य भवेत्पुरस्य।
व्यक्तिर्भवेच्चाह्नि तारकाणां नक्तं च तारागणसंप्रणाशः॥१४॥
प्रासादवेश्मवसुधाशरगुल्मनिम्नेष्वावासका[6] बलिभुजामनपत्यता वा।
[7]एकाण्डजत्वमथवा भुवि मण्डलानि कुर्वन्ति [8]चक्रकमिवोपरि वा भ्रमन्तः॥१५॥
उल्काभिघातेन तमोऽतिदीप्तया वक्रातिवक्रेण सुतो धरित्र्याः।
केतुर्गतिः स्पर्शनधूपनेन चारेण पीडां कुरुतेऽर्कपुत्रः॥१६॥
त्रिभिस्त्रिभिर्भैरथ कृत्तिकाद्यैर्निष्पीडितैर्भूपतयोऽभियोज्याः।
पाञ्चालनाथो मगधाधिपश्च कलिङ्गराडुज्जयिनीपतिश्च॥१७॥
आनर्तराट् सैन्धवहारहूनौ[9] [10]मद्रेश्वरोऽन्यश्च कुरङ्गनाथः[11]।
एते हि कूर्माङ्गसमाश्रितानां विशेषपीडामुपयान्ति भूपाः॥१८॥
अङ्गेषु सूर्यो यवनेषु चन्द्रो भौमो ह्यवन्त्यां मगधेषु सौम्यः।
सिन्धौ गुरुर्भोजकटेऽथ[12] शुक्रः सौरिः[13] सुराष्ट्रे विषये बभूव॥१९॥
म्लेच्छेषु केतुश्च तमः कलिङ्गे जाता यतोऽतः परिपीडितास्ते।
स्वजन्मदेशान् परिपीडयन्ति [14]ततोऽभियोज्याः क्षितिपेन देशाः॥२०॥
सम्पूज्यन्ते भैरवोऽनुनादै[15] रक्तैर्मांसैस्तालजङ्घादयो वा।
दृश्यन्ते वा यातुधानाः प्रभूता भ्रष्टश्रीकः सोऽपि देशोऽभियोज्यः॥२१॥

---

१. निर्घृणाश्च for निर्घृणाश्च P. २. च for वा PI. K. ३. निम्नजा for निम्नता K. ४ वा० for चा० P. ५. त्र्यह्ना० for अह्ना० K. ६. ०व्यास० for ०वास० PI. ७. एकात्मजत्व० for एकाण्डजत्व० PI. ८. चक्रमिव चो for चक्रकमिवो PI. ९. अनन्तराः सैंधवहारहूरो for आनर्तराट् सैन्धवहारहूनौ PI. १०. मद्रे० for मद्र० PI. ११. कुलूतनाथः PI., कुलिन्दनाथः K. १२. ०भोजकटेषु for ०भोजकटेऽथ PI, K. १३. सौरः for सौरिः K, शौरः P. १४. तेऽतो० for ततो० K. १५. ०नुराधै for ०नुनादै K.

देशभ्रंशो यैर्निमित्तैः प्रदिष्टस्तांस्ता [1]वार्ता वक्ति लोको विशङ्कः ।
त्यक्त्वा देशं यान्ति यं भिक्षुका वा गम्यो देशः सोऽप्यसाधुप्रवृत्तः ॥२२॥
रोगाभिभूतं विषदूषितं वा यथा विनाशाभिमुखं शरीरम् ।
वैद्यः[2] प्रयोगैः सुदृढं करोति राष्ट्रं तथा शान्तिभिरग्रजन्मा ॥२३॥
इति श्रीवराहमिहिराचार्यविरचितायां योगयात्रायामभियोगाध्यायस्तृतीयः ॥३॥

## अथ चतुर्थोऽध्यायः ।

देहः कोशो योद्धा बाह्यं मन्त्रः शत्रुर्मार्गोऽथायुः[3] ।
चित्तं[4] कर्म प्राप्तिर्मन्त्री प्राग्लग्नाद्या भावाश्चिन्त्याः ॥१॥
त्रिलाभवर्ज रविसौरिभौमा निघ्नन्ति नो कर्मणि सौरिभौमाः[5] ।
पुष्णन्ति सौम्या रिपुराशिवर्जं [6]नास्तं भृगुर्मृत्युविलग्नमिन्दुः ॥२॥
तिथ्युद्गमेन्दुकरणार्कदिनक्षणेषु पापेष्वभीष्टफलदा नृपतेर्यथा स्यात् ।
यात्रा तथापरमिदं कथयामि गुह्यं शिष्याय नैतदचिराध्युषिताय दद्याः[7] ॥३॥
योगैः क्षितिपा विनिर्गताः शकुनैस्तस्करचारणादयः ।
[8]नक्षत्रगुणैर्द्विजातयः क्षणवीर्यादितरो जनोऽर्थभाक् ॥४॥
यद्वद्योगवशाद् [9]व्रजत्यगदतां द्रव्यैर्विषं योजितं
संयुक्तं मधुना घृतं च विषतां गच्छद् यथा दृश्यते ।
तद्वद् योगसमुद्भवं प्रकुरुते हित्वा ग्रहः स्वं फलं
यस्मात् तेन समुद्यतोऽस्मि गदितुं योगान विचित्रानिमान् ॥५॥

अथ योगाः[10]

लग्ने गुरुर्बुधभृगू हिबुकात्मजस्थौ
षष्ठे[11] कुजार्कतनयौ दिनकृत् तृतीये[12] ।
चन्द्रश्च यस्य दशमे[13] भवति प्रयाणे
तस्याभिवाञ्छितफलाप्तिरलं नृपस्य ॥६॥
होरातृतीयरिपुलाभगतैः क्रमेण
[14]जीवार्कभौमरविभिर्भृगुजेऽनुकूले ।

---

१. तांस्तान् भावान् for तास्ता वार्ता Pı. २. वैद्यप्रयोगः for वैद्यः प्रयोगैः Pı. ३. ०प्यायुः for थायुः P, Pı. ४. चित्रं for चित्तं P. ५. सूर्यभौमौ for सौरिभौमाः P. सौरभौमौ Pı. ६. ०वर्जमस्तं for वर्जं नास्तं Pı. ७. दद्यात् for दद्याः Pı. ८. ०बलै० for गुणै० Pı. ९. ०वशादगादमृततां for ०वशाद् व्रजत्यगदतां Pı. १०. अथ योगाः is missing in Pı. ११. षष्ठौ for षष्ठे P., Pı. १२. ०तृतीयः P. Pı. १३. दशमो P, Pı. १४. जीवार्कि० K.

यातोऽतिदृप्तमपि शत्रुबलं निहन्ति
नैशं तमिस्रमिव [1]तिग्ममयूखमाली ॥७॥

[2]उदयारिनभस्थलगैर्दिनकृत्तमशीतकरैः ।
न भवन्त्यरयोऽभिमुखा हरिणा इव केसरिणः ॥८॥

गुरुरुदये रिपुराशिगतोऽर्को यदि निधने न च शीतमयूखः ।
भवति गतोऽत्र शशीव नरेन्द्रो रिपुवनिताननतामरसानाम् ॥९॥

शुक्रवाक्पतिबुधैर्धनसंस्थैः सप्तमे शशिनि लग्नगतेऽर्के ।
निर्गतो नृपतिरेति कृतार्थो वैनतेयवदरीन्[3] विनिगृह्य ॥१०॥

मूर्त्तिवित्तसहजेषु संस्थिताः शुक्रचन्द्रसुततिग्मरश्मयः ।
यस्य यानसमये रणानले तस्य यान्ति शलभा इवारयः ॥११॥

[4]सूर्येन्दू बलवर्जितौ बलयुतौ जन्मेशलग्नेश्वरौ
पाताले दशमेऽपि वा शशिसुतो लग्नस्थितो वाक्पतिः ।
षट्सप्ताष्टमवर्जितेषु भृगुजः स्थानेषु यस्य स्थितो
यातुस्तस्य न विद्विषो रणमुखे तिष्ठन्ति योषा इव ॥१२॥

सौरे भौमे लग्नगेऽर्के स्वमध्ये कर्मण्याये भार्गवे चन्द्रजे च ।
यायाद् भूपः[5] शत्रुदेशं निहन्तुं दृप्तं शत्रुं[6] कालवद् क्रूरचेष्टः ॥१३॥

लाभशत्रुसहजेषु यमारौ सौम्यशुक्रगुरवो बलयुक्ताः ।
गच्छतो यदि ततोऽस्य धरित्री सागराम्बुरसनावशमेति ॥१४॥

पापास्तृतीये हिबुके सितज्ञौ जीवे[7] विलग्ने मृगलाञ्छनोऽस्ते ।
यस्योद्गमे तस्य बलं रिपूणां कृतं[8] कृतघ्नेष्विव याति नाशम् ॥१५॥

चन्द्रेऽस्तगे देवगुरौ[9] विलग्ने ज्ञशुक्रयोः कर्मणि लाभगेऽर्के ।
[10]सौरारयोर्भ्रातृगयोश्च यातो[11]नृपः स्वभृत्यानिव शास्ति शत्रून् ॥१६॥

गुरौ विलग्ने यदि वा शशाङ्के षष्ठे रवौ कर्मगतेऽर्कपुत्रे ।
सितज्ञयोर्बन्धुसुतस्थयोश्च यात्रा जनित्रीव[12] हितानि[13] धत्ते ॥१७॥

पत्यौ गिरां लग्नगतेऽवशेषैरेकादशार्थोपगतैर्थियासोः ।

१. ०मरीचि० for ०मयूख० Pr. २. नभस्थल for नभस्तल P. Pr. ३. ०दहीन for ०दरीन P. ४. सूर्येन्दु० for सूर्येन्दु० ५. भूपालः for भूपः K. ६. K. adds वा after शत्रुम् । ७. जीवो for जीवे Pr. ८. पापं for कृतं P. ९. ०गुरू for ०गुरौ K, P. १०. शौरा० for सौरा P. ११. जातो for यातो P. १२. धनि० for जनि० P. १३. हिताय for हितानि Pr.

विदार्यते शत्रुबलं समन्ताद् धर्मो यथा हेतुशतैर्युगान्ते ॥१८॥
[1]त्रिषडनवान्त्येष्वबलः शशाङ्कश्चान्द्रिर्बली यस्य गुरुश्च[2] केन्द्रे ।
तस्यारियोषाभरणैः प्रियाणि प्रियाः प्रियाणां जनयन्ति सैन्ये[3] ॥१९॥
केन्द्रोपगतेन[4] वीक्षिते गुरुणा [5]त्र्यायचतुर्थगे सिते ।
पापैरन[6]वाष्टसप्तगै[7]र्वसु[8]किं तन्न यदाप्नुयाद् गतः[9] ॥२०॥
लग्नारिकर्महिबुकेषु शुभेक्षिते[10]ष्वे
द्यूनान्त्यलग्नरहितेष्वशुभग्रहेषु ।
यातुर्भयं न भवति प्रतरेत्समुद्रं
यत्नश्मना[11] किमुत शत्रुसमागमेषु ॥२१॥
यस्योदयास्तारिचतुस्त्रिसंस्थाः [12]शुक्राङ्गिरोङ्गारकसौम्यसौराः ।
[13]द्विषद्बलस्त्रीवदनानि तस्य क्लान्तानि कान्ता न [14]विलोकयन्ति ॥२२॥
पूर्वोक्तयोगे धनगो[15] बुधश्चेच्छशाङ्कसूर्यौ च दशायसंस्थौ ।
अस्मिन् गतस्यालिकुलोपगीता नानावनोत्था द्विरदा भवन्ति ॥२३॥
सूर्यादयोरिसहजाम्बरशत्रुलग्न-
बन्ध्वायगाः सुरगुरोर्दिवसश्च[16] यस्य ।
यानेरिसैन्यमुपगच्छति तस्य नाशं
मीमांसकः[17] श्रवणकेष्विव तीर्थपुण्यम्[18] ॥२४॥
त्रिनिधनतनुसप्तमारिसंस्थाः कुजसितजीवबुधा रविश्च यस्य ।
खलजनजनितेव लोकयात्रा न भवति तस्य चिराय शत्रुसेना ॥२५॥

१. त्रिषष्टचा for त्रिषड्नवा P1.
२. च is missing in P1.
३. सौन्ये for सैन्ये P1
४. केन्द्रोप० for केन्द्रोप P., P1
५. च्याय० for त्र्याय० P., आय P1.
६. ०रवाष्ट० for ०रनवाष्ट० P1.
७. सप्तमै० for सप्तगै० P., P1.
८. बसु for वसु P1
९. ०द्गतः is missing in P1.
१०. ०क्षिते is missing in P1.
११. The portion beginning with यातुर्भयं and ending with समागमेषु is missing in P1.; K. reads यत्नश्मनापि किमुतारिसमागमेषु ।
१२. ०ङ्गिरोङ्गारकौ for ०ङ्गिरोङ्गारक P. P1.
१३. द्विषड्बल० for द्विषद्बल P1.
१४. वलो० for विलो० K.
१५. धनदो for धनगो P1.
१६. ०दिवसोऽपि for दिवसश्च K.
१७. मीमांसक for मीमांसकः K.
१८. पुण्यतीर्थे for तीर्थपुण्यम् P1.

कुजरविजयुते[1]ऽरिभे गतानां बलसहजोपगतैः सितार्कजीवैः[2] ।
रिपु[3]बलमुपयाति नाश[4]माशु श्रुत[5]मधनस्य कुटुम्बचिन्तयेव[6] ॥२६॥
लग्नत्रिधर्मारिदशायगेषु सितार्कजीवेन्दुकुजेन्दुभेषु[7] ।
सार्के[8]बुधे चारिबलं विनाशमायाति गुह्यं पिशुनेष्विवोक्तम् ॥२७॥
एकान्तरर्क्षे भृगुजात्कुजाद्वा सौम्ये स्थिते सूर्यसुताद्गुरोर्वा ।
प्रध्वंसते[9]ऽरिर्न चिराद्गतस्य वेषाधिको भृत्य इवेश्वरस्य ॥२८॥
निरन्तरं यदि भवनेषु पञ्चसु ग्रहाः स्थिता दिवसकरेण वर्जिताः ।
यियासतो यदि च भवन्ति पृष्ठतस्[10] तदा परान् बलभिदिवाव[11]क्रन्तति ॥२९॥
एकांतरा यदि गता भवनेषु षट्सु पृष्ठस्थितश्च सुरशत्रुगुरुः प्रयाणे ।
यातस्य नात्र रिपवो विषहन्ति वीर्यं विष्णोरिवोद्यतगदा[12]रथपादपाणेः॥३०॥
भृगुपुत्रमहेन्द्रगुरू गमने सहितौ यदि भं युगपत् त्यजतः ।
ज्ञगुरू यदि वांशकमेकमितौ[13] समरेमरराडिव भाति तदा ॥३१॥
निस्त्रिंशवक्रोपगते च वक्रे वक्रेण वक्रं नृपतिर्निहन्यात् ।
पानप्रसक्तं निशि वा प्रसुप्तं तस्यैव चास्ते[14] यदि वांशकः स्यात् ॥३२॥
पुत्रो धरित्र्या दिनकृत्सुतश्च यदा त्यजेतां युगपन्नवांशम् ।
तदा ह्यवस्कन्दगतो नरेन्द्रो भुङ्क्ते रिपूंस्तार्क्ष्य इव द्विजिह्वान्[15] ॥३३॥
बुधभार्गवमध्यगते हिमगौ हिबुकोपगते च नृपः प्रवसन् ।
पुरुहूतदिशं यदि वान्तकृतः पुरुहूतयमप्रतिमो भवति ॥३४॥
सितेन्दुजौ चतुर्थगौ निशाकरश्च सप्तमे ।
यदा तदा गतो नृपः प्रशास्त्यरीन् विना रणात् ॥३५॥

१. ०युतेतिमे for युतेरिभे K.
२. ०जीवौ for जीवैः K.
३. पर for रिपु P1.
४. ना is missing in P1.
५. सुत for श्रुत P1.
६. ०यैव for ०येव P.
७. कुजेन्दुजेषु for कुजेन्दुभेषु K., कुजैयुतेषु P1.
८. शाके for सार्के P.
९. प्रध्वंस्यते for प्रध्वंसते P1.

The portion beginning with ०सतेरिर्न and ending with यथाऽधनस्य (Verse 55) is missing in P.

१०. पृष्ठत० for पृष्ठतस्० P1.
११. ०दिवाशु for दिवाव० P1.
१२. महा० for गदा० P1.
१३. ०मेव गतौ for ०मेव मितौ P.
१४. वास्ते for चास्ते P1
१५. द्विजिह्वम् for द्विजिह्वान् P1.

शशिनि चतुर्थगृहं समुपेते बुधसहितेऽस्तगते भृगुपुत्रे ।
गमनमवाप्य पतिर्मनुजानां जयति रिपून् समरेण त्रिनैव ॥३६॥
क्षितितनययुतान्नवांशकाद् यदि शतगो भृगुजोऽथवा गुरु[1]: ।
शतगुणमपि हन्त्यरेर्बलं विषमिव कायमसृक्पथोपगम् ॥३७॥
शतांशकादूर्ध्वमव[2] स्थिते बुधे यमारयोस्तत्र गतस्य भूभृतः ।
प्रयाति नाशं समरे द्विषद्बलं यथार्थिभावोपगतस्य गौरवम् ॥३८॥
नक्षत्रमेकं युगपत्प्रविष्टौ[3] यदा धरित्रीतनयामरेज्यौ ।
कुर्यात्तदान्तं द्विषतां बलस्य द्रौणिर्यथारेर्निशि सौप्तिकेन ॥३९॥
ऋक्षं गुरुज्ञौ बुधभार्गवौ वा यदा प्रविष्टौ युगपत् समेतौ ।
अर्थानवाप्नोति तदा विचित्रांश्छात्रः सुतीर्थाद् गुरुपूजयेव ॥४०॥
यात्रादिगीशाद् यदि पञ्चमेऽन्यो गृहे ग्रहो वीर्ययुतोऽवतिष्ठेत् ।
समुद्यताशाकथितानि भक्त्वा[4] फलानि वीर्यान्नयति स्वकाष्ठाम् ॥४१॥
एकोऽपि जीवज्ञसितासितानां कुजात् त्रिकोणे रवितोऽथवेन्दुः ।
यत्रोद्यतस्तत्र न याति याता तयोर्बलीयान् नयति स्वकाष्ठाम् ॥४२॥
जन्मोदयर्क्षे हिबुकास्तसंस्थं यस्याशुभैर्दृष्टयुतं न सौम्यैः ।
स शाण्डिलीं प्राप्य यथा गुरुत्मान् दैन्यं गतोऽभ्येति हतस्वपक्षः ॥४३॥
होराष्टमे जन्मगृहाष्टमे वा स्वाच्छत्रुभाच्छत्रुगृहोदये वा ।
तद्राशिपैर्वा गमनं विलग्ने तुल्यं नराणां विषभक्षणेन ॥४४॥

रिपुनिधनविलग्ने स्वात् त्रिषड्लाभगे वा
बलवति भवनेशे स्वे कृशे शत्रुपक्षे ।
अनभिमुखदिगीशे दिक्पतौ स्वस्थिते वा[5]
व्रजति यदि यथेष्टं प्राप्नुयात्तत्र याता[6] ॥४५॥

केन्द्रत्रिकोणेषु शुभाः प्रशस्तास्तेष्वेव पापा न शुभप्रदाः स्युः ।
पापोऽपि कामं बलवान्नियोज्यः केन्द्रेषु शून्यं न शिवाय लग्नम् ॥४६॥
केन्द्रेषु शून्येष्वबले च चन्द्रे[7] सौम्यैर्गता वीर्यविवर्जितैश्च ।
दत्ता गयायामिव जारजातैः पिण्डाः पितॄणां क्षितिपा भ्रमन्ति ॥४७॥

१. शततमजो भृगुजोऽथ चेद् गुरुः for यदि शतगो भृगुजोऽथवा गुरुः P1.
२. ०मधः for ०मव० P1.
३. ०भिविष्टौ for ०त्प्रविष्टौ P1.
४. भुक्त्वा for भक्त्वा P1.
५. सुस्थिते for स्वस्थिते P1.
६. यात्रा for याता P1.
७. लग्ने for चन्द्रे P1.

सौम्यैश्च पापैश्च चतुष्टयस्थैः कृच्छ्रेण सिद्धिं समुपैति याता ।
प्रपातयानप्रतिघातवक्रा[1] नदीव धात्रीधरकन्दरेषु ॥४८॥
गुरौ विलग्ने भृगुजेऽरिसंस्थे चन्द्रेऽष्टमे हन्ति गतोऽरिसेनाम् ।
वृष्टिं यथा दक्षिणमार्गचारी रूक्षो यदा[2] ह्रस्वतनुश्च शुक्रः ॥४९॥
सिंहाजतौलिमिथुनं मृगकर्कटौ च
स्वेषान्विता[3] भवति यस्य शनिश्च लग्ने ।
तत्सैनिकाः परबलं क्षपयन्ति यातु-
र्मूर्खस्य वित्तमिव चारणचाटचक्राः[4] (?) ॥५०॥
उदये गुरुसौम्यभार्गवैः सहजेऽर्कार्किकुजैश्च गच्छतः ।
न भवन्त्यरयो रणे स्थिराः कितवानामिव वित्तसञ्चयाः[5] ॥५१॥
जातकोक्तनृपयोगगतानां प्रतिदिनं भवति राज्यविवृद्धिः ।
वातघूर्णितमिवार्णवयानं परबलं हि समुपैति विनाशम् ॥५२॥
होराश्रिते देवगुरौ प्रयाता क्रूरग्रहैः कर्मणि लाभगैर्वा ।
कृत्वा रिपूणां क्षयमक्षताङ्गः क्षयं क्षितीशोऽक्षयकोश ऐति[6] ॥५३॥
लाभार्थलग्नेषु शुभो रविः खे यस्यारसौरौ सहजेऽरिभे वा ।
तस्यार्थकोशः[7] समुपैति वृद्धिं लोभो यथा प्रत्यहमर्थवृद्ध्या ॥५४॥
स्वोच्चोपगैर्जीवकुजार्कजार्कैरेभिस्त्रिभिर्वा[8] कथितैकलग्ने ।
राज्ञः प्रणाशं समुपैति शत्रुः सौख्यं द्विभार्यस्य यथाऽधनस्य ॥५५॥
एकेऽपि[9] ज्ञार्कजार्ककुजानां स्वोच्चे विलग्ने स्वगृहे यदीन्दुः ।
यानस्य यान्त्यत्र परः प्रणाशं महाकुलानीव कुटुम्बभेदैः[10] ॥५६॥
लग्नाच्चतुर्थेऽतिबले[11] शशाङ्के योगाद्विना[12] चन्द्रबलेन यातः[13] ।

१. वक्रे for वक्रा P1.
२. ऽथवा for यदा P1
३. स्वेशा for स्वेषा P1.
४. वंद्य for चक्राः P1.
५. ०संशयाः for ०संचयाः P1.
६. एति for ऐति P., P1.
७. ०राशिः for ०कोशः P1.
८. ०रेभि० for ०रेभ्य० P1
९. एकोऽपि for एकेऽपि। The Leaf 7a of P. begins from पि ।
१०. ०भेदे for भेदैः P1.
११. ०र्थे विबलः ऽशाङ्कः for ०र्थेतिबले शशाङ्के K, ०र्थेविबले शशाङ्के P1.
१२. योगे द्विना for योगाद्विना P
१३. याता for यातः P, P1.

लब्ध्वापि[1] लक्ष्मीं[2] बहुरत्नपूर्णां[3] क्षिप्रं क्षयं याति यथा शशाङ्कः ॥५७॥

येषां गमे नवमपञ्चमकण्टकस्थाः
सौम्यास्तृतीयरिपुलाभगताश्च पापाः ।
आयान्ति ते स्वभवनानि पुनः कृतार्थाः
दत्वा[4] द्विजातिषु पुरा विधिवद् यथार्थाः ॥५८॥

इति श्रीवराहमिहिराचार्यविरचितायां योगयात्रायां योगाध्यायश्चतुर्थः ॥

# अथ पञ्चमोऽध्यायः ।

पूर्वादितस्त्रिपरिवर्तगतैरजाद्यैर्भैः सप्तकै[5]रनलभाद्य गमो जयाय ।
वाय्वग्निदिक्स्थपरिघस्य समार्धगै[6]श्च मैत्राश्विहस्तगुरुभेषु च सर्वदिक्षु ॥१॥

पूर्वेणैन्द्रं दक्षिणेनाजपादं रोहिण्यो[7]तश्चार्यमाख्यं च शूलम् ।
कामं यायात् साम्परायेषु[8] कार्येष्वद्वारेषु[9] प्रोज्झ्य[10] शूलानि तानि[11] ॥२॥

विवर्जयेत्स्वाश्रयमोरगाद्यामर्द्धं[12] द्वितीयं[13] गमने[14] जयेप्सुः ।
पूर्वार्धमाग्नेयमघानिलानां स्वातिं मघां वोशनसः समस्ताम्[15] ॥३॥

उत्पातपापग्रहपीडिते भे ये यान्ति भूरि[16] ग्रहसंयुते वा ।
ते पूर्ववित्तान्यपि नाशयन्ति धातुप्रसक्ता[17] इव वार्तिकेन्द्राः[18] ॥४॥

रविसुत[19]कुजराहुसौर[20]चन्द्रा ज्ञगुरुयुताः पुरतः क्रमाद् दिगीशाः ।
व्रजति यदि ललाटगे[21] दिगीशे पतति ततो द्रुमवत्सरित्तटस्थः ॥५॥

---

१. लब्धा for लब्ध्वा K.
२. लक्ष्मीर् for लक्ष्मीं K.
३. पूर्णा for पूर्णां K.
४. दत्तो for दत्वा P1. दद्यात् P.
५. सप्तमै for सप्तकै P1.
६. ०सासममार्धगैश्च for ०स्य समार्द्धगैश्च P1.
७. भं चार्य for तश्चार्य P1.
८. सम्प० for साम्प P. P1,
९. ०रेपि for रेषु K.
१०. प्रोह्य for प्रोज्झ्य P.
११. भानि for तानि P.
१२. ०मेवं for मर्द्धं P1,
१३. द्वितीय० for द्वितीयं P1,
१४. गमनं for गमने P.
१५. समस्तम् for समस्ताम् P., समस्ते P1.
१६. येषां विभूरि for ये यान्ति भूरि P1.
१७. धातुः for धातु P., P1.
१८. कार्ति० for वार्ति० P.
१९. ०सित० for ०सुत० K.
२०. सौरि for सौर P.
२१. ललाटके for ललाटगे P.

[1]यातोऽयनस्य प्रतिलोमकाष्ठां यः स्यात्स्वतन्त्रोऽपि[2] जितः परेषाम् ।
स केवलं[3] व्याकरणाभियुक्तः काव्यज्ञगोष्ठ्यामिव हास्यमेति ॥६॥
अयनेन गतोऽर्कसोमयोर्दिशं वा स्थितयोः पृथक्-पृथक् ।
विदुषामिव सर्वशास्त्रवित् समवाये द्विषतां विराजते ॥७॥
तिथिं चतुर्थीं नवमीं चतुर्दशीं विहाय विष्टिं करणं च गच्छतः ।
भवन्ति चामीकरवाजिवारणाश्चतुर्थिपूर्वाश्च तदाप्तिवारणाः ॥८॥
ऋक्ते[4] तिथौ वा व्यतिपातदुष्टे यो याति मोहात्खलु वैधृते[5] वा ।
स नाशमायात्यचिरेण याता राजेव[6] दैवज्ञविलोमचेष्टः ॥९॥
आरोग्यमृक्षेण धनं क्षणेन कार्यस्य सिद्धिस्तिथिना शुभेन ।
राश्युद्गमेनाध्वनि सिद्धिमाहुः प्रायः शुभानि[7] क्षणदा करेण[8] ॥१०॥
न राजते भूरिगुणान्वितापि व्यर्थव्ययस्य क्षितिपस्य यात्रा ।
शुक्रे विनष्टे धनदर्पितस्य[9] विवाहयात्रेव जरार्दितस्य ॥११॥
प्रतिशुक्रबुधाशनिवृष्टिहता
दिगधः कुरुते नृपतिं गमने ।
मदिरा मुदिता मदनाकुलिता[10]
प्रमदेव कुलं परवेश्मरता ॥१२॥
वीर्यान्वितैर्यायिभिरात्मभद्रैः क्लेशाद्विना[11] हन्ति चमूमरीणाम्
त्रैलोक्यलाभेऽप्यसमाप्तकार्ये तृष्णां यथा[12] क्षीरफलाम्बुतुष्टः ॥१३॥
सर्पिस्तिलोदनभक्षैः[13] पयसा[14] च भुक्त्वा[15]
पूर्वादिवारणरथाश्वनरैर्गतस्य ।
सोढुं प्रतापमरयो न नृपस्य शक्ता

---

१. यतो for यातो Pɪ,
२. सुतन्त्रो for स्वतन्त्रो K.
३. केवल for केवलं P, Pɪ;
४. रिक्ते for ऋक्ते K. Pɪ.
५. वैधृतौ for वैधृते P.
६. राजा यथैव for याता राजेव Pɪ.
७. सुखानि for शुभानि Pɪ.
८. रवेन for करेण Pɪ.
९. ०दर्थि० for ०दर्पि० Pɪ.
१०. Pɪ. puts मदनाकुलिता after कुलं
११. क्लेशान्विना for क्लेशाद्विना Pɪ.
१२. वीर for क्षीर P, Pɪ.
१३. ०लो० for ०लौ० P.
१४. पयसा for पयसः P.
१५. भुक्ता for भुक्त्वा P.

गन्धद्विपस्य कलभा इव दानगन्धम्[1] ॥१४॥

एकतश्च सकलानि निमित्ता-

न्येकतश्च मनसः परिशुद्धिः ।

चेतसोऽस्ति सहयानरणे भी-[2]

मारुतोऽपि विजयाजयहेतुः ॥१५॥

[3]भूरिशूरवरवाजिकुञ्जरा ज्ञातयुद्धगतयोऽभिमानिनः[4] ।

क्वापि यान्ति घनतूलराशिवन्मारुताभिहतवच्चसोऽरयः ॥१६॥

अनुलोमगते[5] प्रदक्षिणे सुरभौ देहसुखेऽनिले गतः ।

तिमिराणि गभस्तिमानिव प्रसभं हन्ति बलानि विद्विषाम् ॥१७॥

उपपत्तिरयत्नतो यदान्नपानाशनरत्नवाससाम् ।

प्रमदाक्षितिनागवाजिनां विजयद्वारमपावृतं तदा ॥१८॥

लग्नस्य येंशा क्षुदिता ग्रहो यस्तेषु स्थितो लग्नफलं स धत्ते ।

यस्तानतीतः स भवेद् द्वितीयः स्थानेषु शेषेष्वपि चिन्त्यमेतत्[6] ॥१६॥

गतोऽनुकूलैर्महभाग्निमारुतैर्मनोब्दविद्युत्स्वनवृष्टिकामुकैः ।

रिपोः प्रभञ्जानि रणाजिरे चमूं द्विपः समूलां सरसीव पद्मिनीम् ॥२०॥

दैवेन हीनः परभीषणार्थं यातोऽतिकृच्छ्रेण नयत्यहानि ।

स्वशक्त्यतीतो नृपवेश्मनीव कृत्वा प्रतिज्ञां प्रतिवादिभीतः ॥२१॥

दैवान्वितः साधुजनोपकारी प्रभावमन्त्रोद्यमशक्तियुक्तः ।

भुङ्क्ते महीं सम्यगवाप्य यात्रां ससह्यविन्ध्याचलपारियात्राम् ॥२२॥

गोचरेण शुभदः शशी न चेदष्टवर्गपरिशोधितोऽथवा[7] ।

पूर्ववायुरिव पुष्पकालजो यायिनां फलविनाशकृद्भवेत् ॥२३॥

आश्रित्य चेन्द्रस्य बलाबलानि ग्रहाः प्रयच्छन्ति शुभाशुभानि ।

मनःसमेतानि यथेन्द्रियाणि कर्मण्यतां यान्ति न केवलानि ॥२४॥

सर्वतः क्षुतमशोभनमुक्तं गोक्षुतं मरणमेव करोति ।

केचिदाहुरफलं च बलाद् यद् वृद्धपीनसितबालकृतं च ॥२५॥

---

१. दावगन्धम् for दानगन्धम् P1.

२. चेतसोपि सहसास्ति for चेतसोऽस्ति सहयान० K, चेतसोपि सहजास्ति P1.

३. भूरिशः for भूरिशू P1.

४. शुद्ध for युद्ध P1.

५. ०गतौ for गते K. P1.

६. चिन्तनीयम् for चिन्त्यमेतत् K.

७. ०पि वा for ऽथवा K., P1.

शकुनतिथिभलाभे छत्रशय्यासनाढ्यं
पदमपि विजिगीषुश्चालयेच्छ्रद्दधानः ।
यदि शकुननिमित्तेऽस्य स्वचेतोविशुद्धि-
र्न भवति तदनिष्टं सर्वकार्येषु यानम् ॥२६॥

दिनकृद्दिवसे तथांशके यात्रालग्नगतेऽथवा रवौ ।
सन्तापयति स्मरातुरं वेश्येवार्थविवर्जितं नरम् ॥२७॥

उदये शशिनोंऽशकेऽह्नि वा भवति गतो न चिरेण दुर्मनाः ।
प्रमदामिव यातयौवनां रत्यर्थं समवाप्य कर्कशः ॥२८॥

भौमोदयेंशेऽहनि वास्य यात्रा करोति बन्धं वधमर्थनाशम् ।
संसेविता पापपराङ्मुखेन मनोभवान्धेन पराङ्गनेव ॥२९॥

बुधस्य लग्नांशकवासरेषु यात्रा नरं प्रीणयति प्रकामम् ।
भावानुरक्ता प्रवराङ्गनेव विदग्धचेष्टा मदनाभितप्तम्[1] ॥३०॥

गुरोर्विलग्नांशदिनेषु यात्रा हितानुबन्धेप्सितकामदा च ।
जायेव भर्तुर्मनसोऽनुकूला कुलाभिवृद्ध्यै रतिदा हिता च ॥३१॥

यात्रा भृगोरंशदिनोदयेषु प्रीणाति कामैर्विविधैर्यियासुम् ।
विलासिनीकामवशोपयातं भावैरनेकैर्मदनातुरेव ॥३२॥

द्विलग्नभागेषु शनैश्च यात्रा प्राणच्छिदादीन् प्रचिनोति[2] दोषान् ।
अन्यप्रसक्ता वनितेव मोहान्निषेविता मन्मथमोहितेन ॥३३॥

लग्नेन हीनान्यगुणान्वितापि प्रीतिं न यात्रा मनसः करोति ।
स्वलङ्कृता रूपसमन्वितापि प्रभ्रष्टशीला वनितेव पुंसाम् ॥३४॥

लग्नस्य शुद्धिः शकुनैर्निमित्तैर्विज्ञायतेऽन्तःकरणेन सम्यक् ।
अनन्यभावाश्रयसम्प्रवृत्तैः कौलीव पुंसश्चरितैर्विदेशे ॥३५॥

छाया शुभाशुभफलानि निवेदयन्ती
लक्ष्या मनुष्यपशुपक्षिषु लक्षणज्ञैः ।
तेजोगुणान्बहिरपि प्रविकाशयन्ती
दीपप्रभा स्फटिकरत्नघटस्थितेव ॥३६॥

स्निग्धद्विजत्वङ्नखरोमकेशा छाया सुगन्धा च महीसमुत्था ।
तुष्ट्यर्थलाभाभ्युदयान् करोति धर्मस्य चाहन्यहनि प्रवृद्धिम् ॥३७॥

स्निग्धा सिता च हरिता नयनाभिरामा

१. ०भिभूतम् for ०भितप्तम् K. २. प्रतनोति for प्रचिनोति K.

सौभाग्यमार्दवसुखाभ्युदयान् करोति ।
सर्वार्थसिद्धिजननी जननीव चाप्या
छाया फलं तनुभृतां शुभमादधाति ॥३८॥
चण्डा धृष्या पद्महेमाग्निवर्णा युक्ता तेजोविक्रमैः सप्रतापैः ।
आग्नेयीति प्राणिनां स्याज्जयाय क्षिप्रं सिद्धिं वाञ्छितार्थस्य धत्ते ॥३९॥
मलिनपरुषकृष्णा पापगन्धानिलोत्था
जनयति वधबन्धव्याध्यनर्थार्थनाशान् ।
स्फटिकसदृशरूपा भाग्ययुक्ताऽत्युदारा
निधिरिव गगनोत्था श्रेयसां स्वच्छवर्णा ॥४०॥
इति श्रीवराहमिहिराचार्यविरचितायां योगयात्रायां मिश्रकाध्यायः पञ्चमः ॥

---

## अथ षष्ठोऽध्यायः ।

पुरुहूतहुताशयमा निर्ऋतिवरुणानिलयक्षशिवाश्च दिशाम् ।
पुनरर्कसितारतमो रविजाः शशिसौम्यबृहस्पतयः पतयः ॥१॥
शच्या सहैरावणगः सवज्रो हैमोऽथवा दारुमयो महेन्द्रः ।
विचित्रमाल्यध्वजरत्नचन्दनैः सौम्योपहारेण स पूजनीयः ॥२॥
अथ मन्त्रमभीष्टुणाः सखीनामिति जप्त्वा पुरतः पुरन्दरस्य ।
पुरुहूतदिशं नृपोऽभियुञ्ज्यात्पुरुहूतं हृदये निवेश्य सम्यक् ॥३॥
ताम्रजा प्रतिकृतिः सहस्रगो रक्तचन्दनकृतानुलेपना ।
रक्तवस्त्रकुसुमध्वजार्चिता सूर्यकान्तमणिभिर्विभूषिता ॥४॥
आकृष्णेनेति यदि वाप्युदुत्यं मन्त्रं समावर्त्य रवेः पुरस्तात् ।
क्षीरौदनेन प्रतिपूज्य यायात् प्राचीं पुरस्कृत्य दिनेशशक्रौ[1]
अग्नेस्तनुः कनकेनैव कार्या रक्तो ध्वजः कुसुमं चन्दनं च ।
आज्यं बलिं हुतभुग्दिग्जिगीषोर्मन्त्रं घृतं घृतयोनेः पठेच्च ॥६॥
कार्यश्चित्रो दितिसुतगुरुर्वा यमो वाऽर्धकायो
नानारूपाः कुसुमबलयस्तत्र[2] चित्रो ध्वजश्च ।
शुक्रज्योतिः प्रभृति च जपेन्मन्त्रमस्याग्रतस्तौ
कृत्वा यायाद् भृगुजदहनौ जेतुमिच्छुस्तदाशाम् ॥७॥

---

१. शक्रौ for शक्रौ P. २. तस्य for तत्र K.

अयोमयं प्रोद्यतदण्डहस्तं यमं सकृष्णाध्वजपुष्पगन्धै-
स्तिलौदनैरर्च्य समांसमद्यैर् यमेन दत्तं च जपोऽस्य कार्यः ॥८॥
मूर्तिः स्याद्रुधिराह्वसंज्ञमणिना भौमस्य रक्ताः स्रजो
रक्तानि ध्वजचन्दनानि कुसुमैः पक्वान्नमांसैर्बलिर्
अग्निर्मूर्धपदैः स्तुतिः क्षितिसुतस्यैवं यमाङ्गारकौ
दिङ्नाथौ गमनेऽमतो नरपतिः कृत्वा व्रजेद् दक्षिणाम् ॥९॥
भैरवा प्रतिकृतिः पटे[1] कृता सर्वगन्धफलपुष्पपूजिता ।
एष ते निर्ऋतिमन्त्रचोदना कृष्णरक्तकुसुमध्वजाम्बरा ॥१०॥
सुरदारुमयः शशाङ्कशत्रुः कुसुमाद्यैरसितैः कृतोपहारः ।
निर्ऋतिसहितः स्वदिक्प्रयाणो स्तुतिमन्त्रोऽस्य च कीर्तितः कया नः ॥११॥
पश्चाद् व्रजेद् रजतमयं जलेश्वरं पाशान्वितं सह गदया च पूजितम् ।
कृत्वौदनैर्बलिमपि पावकान्वितं ये ते शतं वरुण इति स्तुयाद् द्विजः ॥१२॥
शौरेरर्चा नीलकाचा कृशाङ्गी पूज्या कृष्णैर्वस्त्रमाल्योपहारैः ।
शन्नो देवीत्येष मन्त्रोऽपराशां जेतुं यायात् तौ पुरस्कृत्य देवौ ॥१३॥
वायोर् मूर्तिः श्वेतमृद्भिर्विधेया पूज्या श्वेतैः पुष्पवस्त्रध्वजाद्यैः ।
मन्त्रो वातो वा मनो वेति जप्य वायव्याशां प्रस्थितस्येश्वरस्य ॥१४॥
मन्त्रः सोमस्याऽऽप्यायस्वेत्यन्यच्छ्वेतं स्रग्वस्त्राद्यम् ।
वायुं सोमं चाग्रेकृत्वा यायाद्राजा वायोः काष्ठाम् ॥१५॥
हाटकमूर्तिं कुर्याद्धनदस्य विभूषितां रत्नैः ।
सर्वैः सगदां च पूजितां स्रग्वस्त्राद्यैश्च विचित्रैः ॥१६॥
रक्षसां भागोऽसीत्येष मन्त्रः ।
सौवर्णी रजतासने नृमिथुनं चन्द्रात्मजस्येष्यते
हारिद्रौदनमिष्टगन्धकुसुमैर्वस्त्रैश्च संपूजितम् ।
उद्बुध्यस्व जपश्च तस्य कथितः स्याद् ब्रह्मयज्ञादिना
गच्छेदुत्तरतो धनेश्वरबुधौ ध्यायन् पुरस्कृत्य च ॥१७॥
गोत्वग्जा प्रतिभैरवा प्रतिकृतिर्भस्मोत्कटा शूलिनो
दध्ना चौदनसंयुतेन बलिभिर्मन्त्रो नमः शंभवे ।
मूर्तिः स्यान्मणितो गुरोर्विमलकात् पीतं तु वस्त्रादिकं
मन्त्रश्चास्य बृहस्पतेरिति तयोर्यायाद् दिशं पूज्य तौ ॥१८॥

---

१. पठे for जपे० K.

दिङ्नाथं कुलदेवतां स्वनगरे येषां कृताश्चालया-

स्तान् संपूज्य यथानुरूपबलिभिर्दद्याद् बलिं भौतिकीम् ।

कृत्वा पायसमद्यमांसपललैर्भक्ष्यैश्च नानाविधै-

र्बालक्रीडनकैः सुगन्धकुसुमैर्मूलैः फलैः स्वादुभिः ॥१९॥

नमोऽस्तु वः शक्रहुताशदण्डभृत्क्षपाचराम्भःपतिमातरिश्वनाम् ।

कुबेररुद्राहिसुपर्णशक्तिभृत्पिशाचदैत्यानुचराश्च ये गणाः ॥२०॥[1]

रथ्यापुरद्वारनदीतटेषु चतुष्पथाट्टालकनिष्कुटेषु ।

गुहैकवृक्षाद्रिषु ये वसन्ति ते पूजनीयाः प्रमथा यथावत् ॥२१॥

कुसुमशरशरीरस्पर्द्धिनः कामरूपा

विविधसुरभिवस्त्राः स्रग्विणोऽसह्यवीर्याः ।

पवनसदृशवेगा मानिनोऽत्यन्तहृष्टा-

स्तरुणदिनकरत्विट्स्पर्धि तेजो दधानाः ॥२२॥

लम्बक्रोडा ह्रस्वा दीर्घाः खञ्जैकाक्षाः शुष्काः स्थूलाः ।

नानापक्षिव्यालोष्ट्रास्या वक्त्रैर्हीनाः क्रोडास्याश्च ॥२३॥

बहुवक्त्रशिरोभुजपाददृशः कृकलासभुजङ्गकृताभरणाः ।

विकटा मुकुटोत्कटरत्नभृतस्तरुणार्कतडिद्धुतभुक्कपिलाः ॥२४॥

भ्रमरतमालद्विपगवलाभाः क्षितिधरमेघप्रतिमशरीराः ।

अशनिनिपातस्वनसमनादा द्रुतगमने च श्वसनमनोगाः ॥२५॥

असिमुसलगदाश्मशक्तिशूलद्रुमशरासनबाणचक्रहस्ताः ।

कणपपरिघकुन्तमुद्गिमायालगुडकुठारशतघ्निधारिणश्च ॥२६॥

गृह्णन्तु प्रमथगणा बलिं सभूता भूभर्त्रा विजिगीषुणा निवेदितं वः ।

जित्वारीन् द्विगुणमतो बलिं विचित्रं दास्यामः स्वविषयमेत्य वः प्रसादात् ॥२७॥

राजा वः शरणमुपागतः सभृत्यः सामात्यः ससुतकलत्रमित्रबन्धुः ।

रक्षार्थं मनुजपतेः सहायकृत्यं कुर्वीध्वं रिपुबलसंक्षयाय चास्य ॥२८॥

स्वप्ने निमित्तमथवा मनुजेश्वरस्य यच्छध्वमेकतममस्य जयाजयाय ।

एवं भवत्युपकृतं सुमहद् भवद्भिः कार्यं करिष्यति यथा भवतां प्रसादात् ॥२९॥

इति श्रीवराहमिहिराचार्यकृतायां योगयात्रायां बल्युपहाराध्यायः षष्ठः ॥

---

१. K reads this verse after V. 21.

## अथ सप्तमोऽध्यायः ।

मदयन्तिकाऽश्वगन्धा मदनफलवचामधूनि शस्यन्ते ।
प्रथमर्क्षे भरणीषु च सिद्धार्थकभद्रदारुवचाः ॥१॥
न्यग्रोधशिरीषाश्वत्थपत्रगन्धाश्च कृत्तिकास्नाने ।
बहुबीजशस्ततोयैर्जयार्थिनो रोहिणीस्नानम् ॥२॥
मुक्ताकाञ्चनमणिसंयुक्तेनाम्भसा[1] मृगाङ्कर्क्षे ।
रौद्रे वचाश्वगन्धाप्रियङ्गुमिश्रैर्जलैः कथितम् ॥३॥
आदित्ये गोमयगोष्ठमृद्भिरथ गौरशालिभिः पुष्ये ।
सिद्धार्थैश्च सहस्रैः प्रियङ्गुमदयन्तिकाभिश्च ॥४॥
वल्मीकशतान्मृद्भिर्नागैः पित्र्ये तु देवनिर्माल्यैः ।
पूर्वासु च फाल्गुनीषु च सलवणघृतशाद्वलैः प्रोक्तम् ॥५॥
शतपुष्पया प्रियंग्वा मुस्ताभिश्चोत्तरासु कुर्वीत ।
हस्ते सरोगिरिमृदा चित्रायां देवनिर्माल्यैः ॥६॥
स्वातौ जलरुहकुसुमैरैन्द्राग्नेर् मुस्तपद्मकक्षौद्रैः ।
मैत्रे सरिदुभयमृदा हरितालमृदा च माहेन्द्रे ॥७॥
भद्रासने शमीमयपत्रसहस्रद्वयाम्बुभिर्मूले ।
समधूकपद्ममत्स्यैः स्नानमषाढासु पूर्वासु ॥८॥
कुर्यादुशीरचन्दनपद्मकमिश्रेण वारिणा वैश्वे ।
नद्युभयकूलसङ्गममृत्कनकैः कीर्त्यते श्रवणे ॥९॥
घृतभद्रदारुमधुभिश्च वासवे वारुणे घृतक्षौद्रैः ।
समदनफलसहदेवाम्बुशूकमदयन्तिकामिश्रैः ॥१०॥
श्रीवासकः प्रियङ्गुश्चाजे स्यादुत्तरास्वगुरुगन्धाः ।
शस्ताः सपद्मकोशीरचन्दना मानवेन्द्राणाम ॥११॥
रेवत्यां वृषभद्विपविषाणकोशैश्च सर्पिमधुपूर्णैः ।
गोरोचनाञ्जनयुतैः सलिलैश्च यियासतः पुंसः ॥१२॥
गिरिवल्मीकनदीमुखकूलद्वयशक्रपादमृद्भिरतः ।
द्विपवृषविषाणपार्थिवगणिकाद्वाराहृताभिश्च ॥१३॥
गिरिशिखरान्मूर्धानं वल्मीकमृदा च शोधयेत्कर्णौ ।

---

1. शंखयोजितैम्भसा for संयुक्तेनाम्भसा P.

नद्युभयकूलसङ्गममृद्भिः प्रक्षालयेत्पार्श्वे ॥१४॥
इन्द्रस्थानाद् ग्रीवां बाहू करिवृषभयोर्विषाणाग्रात् ।
हृदयं नृपद्वारात् कटिमपि वेश्यागृहद्वारात् ॥१५॥
अक्षतमाषाः स्विन्नास्तिलसहितास्तण्डुला दधि च गव्यम् ।
वृषभपिशितं मृगस्य च पश्चानामश्विनादीनाम् ॥१६॥
रुधिरविलापनपायसविहंगमांसानि शाक्रादीनाम् ।
पित्र्ये तिलौदनं षाष्टिकान्नमृक्षद्वये परतः ॥१७॥
प्राश्याः प्रियङ्गुचित्राण्डजाः पलं यावकं कुलत्थाश्च ।
मधुसर्पिषी हस्तात् मूलाम्भःसक्तवोऽपि मूलात् ॥१८॥
श्रवणादीनां मध्यात्[1] शाकं[2] शालिर्बिडालमांसं वा ।
आजं[3] यथेष्टमांसं सुसक्तवो माषसम्पृक्ताः ॥१९॥
प्राचीं गजेन यायाद्रथेन याम्यां हयेन वारुण्याम् ।
नरयानेनोदीचीं सर्वे दृष्ट्वा दिगीशायाः ॥२०॥
प्राच्यादि घृतं तिलौदनं मत्स्यान् क्षीरमिति प्रदक्षिणम् ।
अद्यान्नृपतिर्यथादिशं नक्षत्राभिहितं च सिद्धये ॥२१॥[4]
अस्वादु च्युतकचमक्षिकानुविद्धं
दुर्गन्धि क्षयकृदभूरि यच्च दग्धम् ।
सुस्विन्नं शुचिरुचिरं मनोऽनुकूलं
स्वाद्वन्नं बहुविजयाय यानकाले ॥२२॥

इति श्रीवराहमिहिराचार्यकृतायां योगयात्रायां नक्षत्रविजयस्नान-
प्राशनोऽध्यायः सप्तमः ।

१. भक्ष्या for मध्यात् K.
२. शालिः for शाकम् K.
३. आज्यम् for आजम् K.
४. This verse is missing in K.

# अथाष्टमोऽध्यायः ।

वेदी शुभा [1]शुद्धविधानदृष्टा

दिक्स्थानमानाभ्यधिका न हीना ।

भ्रष्टप्रमाणा[2] [3]प्रकरोति भङ्गं

दिग्वक्रसंस्था च न सिद्धिदा स्यात् ॥१॥

प्राग्भागहीना नगरस्य नेष्टा

पुरोधसां दक्षिणभागवक्रा ।

नरेन्द्रजायाऽशुभदा[4] परस्या-

मुदग्बलेशस्य नृपस्य मध्ये ॥२॥

मर्त्यैरलीढं न पिपीलमक्षिकामलाविलं वा विजयप्रदं हविः ।

द्रव्याण्यनूनानि पटुः पुरोहितो जुहोति सम्यग्विजयाय भूभृताम् ॥३॥

गन्धमाल्यचरुकुम्भभाजनस्रुक्कुशाञ्जनसर्पिषां यदा ।

भङ्गविस्मृतिनिपातहीनता पार्थिवस्य न भवेत्तदा शुभम्[5] ॥४॥

शान्तायां दिशि यदि शंखतूर्यशब्दाः

सस्निग्धा रुतगजबृंहितानि वा स्युः ।

पुंसां वा प्रमुदितचेष्टितप्रलापाः

श्रूयन्ते यदि च जयोऽस्ति होमकाले ॥५॥

अप्रतिरथः समस्तो यात्रालिङ्गस्तथाऽभयश्च गणाः ।

स्वस्त्ययनशर्मवर्मापराजितायुष्यसंज्ञाश्च ॥६॥

इन्द्रश्चन्द्रेति गणो यं ते चन्द्रश्च भूतभूतेति ।

सूक्तमहाव्याहृतयो मन्त्राशीर्वैष्णवा मन्त्राः ॥७॥

प्राजापत्याश्चोक्ता होमे[6] निर्गच्छतोऽनुगमने च ।

अग्निपुरोहितसंस्थान्यतो[7] निमित्तानि वक्ष्यामि ॥८॥

कृतेऽपि यत्नेऽतिकृशः कृशानुर्यातव्यकाष्ठाविमुखो नतार्चिः ।

---

१. शिल्प for शुद्ध K.

२. भ्रष्टा प्रमाणेन for भ्रष्टप्रमाणा K.

३. प्र is missing in K.

४. नरेन्द्रजानां शुभदा P.

५. तदा भवेच्छिवम् for भवेत्तदा शुभम् K.

६. ०श्च ये मन्त्राः for श्चोक्ता होमे K.

७. ० नि for न्यतो K.

वामीकृतावर्तशिखोऽसिधूमो विच्छिन्नसाकम्पविलीनमूर्तिः ॥९॥
सिमिसिमायति यस्य हविर्हुतं
सुरधनुःसदृशः कपिशोऽथवा ।
रुधिरपीतकबभ्रुहरिच्छविः
परुषमूर्तिरनिष्टकरोऽनलः ॥१०॥
श्वखरकरभवानरानुरूपो निगडविभीषणशस्त्ररूपभृद्वा ।
शवरुधिरवसास्थिमज्जगन्धो हुतभुगनिष्टफलः स्फुलिङ्गकृच्च ॥११॥
चर्मविपाटनतुल्यनिनादो जर्जरमन्दविरूक्षरवो वा ।
आकुलयंश्च पुरोहितसभ्यान् धूमचयैरशिवाय हुताशः ॥१२॥
स्वाहावसानसमये स्वयमुज्ज्वलार्चिः
स्निग्धः प्रदक्षिणशिखो हुतभुग्नृपस्य ।
गङ्गादिवाकरसुताजलचारुहारां
धात्रीं समुद्ररसनां वशगां करोति ॥१३॥
हारकुन्दकुसुमेन्दुसन्निभः संहतोऽङ्गसुखदो महोदयः ।
अंकुशातपनिवारणाकृतिर्हूयतेऽल्पतपसां न हव्यभुक् ॥१४॥[1]
चामीकराशोककुरण्टकाब्जवैडूर्यनीलोत्पलसन्निभेऽग्नौ ।
न ध्वान्तमन्तर्भवने वकाशं करोति रत्नांशु[2]हतं नृपस्य ॥१५॥
येषां रथौघार्णवमेघदन्तिनां समस्वनोऽग्निर्यदि वापि दुन्दुभेः ।
तेषां मदान्धेभघटावघट्टिता भवन्ति याने तिमिराविला दिशः ॥१६॥
ध्वजकुम्भहयेभभूभृतामनुरूपे वशमेति भूभृताम् ।
उदयास्तधराधराधरा हिमवद्विन्ध्यपयोधरा धरा ॥१७॥
द्विरदमदमहीसरोजलाजैर्घृतमधुनोश्च हुताशने सगन्धे ।
प्रणतनृपशिरोमणिप्रभाभिर्भवति पुरश्छुरितेव भूर्नृपस्य ॥१८॥
अग्न्याश्रितं यत्फलमुक्तमस्मिन्नृजातकर्मादिषु[3] पौष्टिकेषु ।
यज्ञेषु सर्वेषु च वह्निकार्येष्वेवं वदेद् यस्य यथानुरूपम् ॥१९॥
इति श्रीवराहमिहिराचार्यविरचितायां योगयात्रायाम् अग्निनिमित्ताध्यायोऽष्टमः[4] ॥८॥

---

१. The order of the verse is reverse in K. It reads V. 14 after V. 12.

२. कृतं for हृतं P.

३. तज्जात for न्नृजात K.

४. Ms. Pl. omits VI—VIII chapters.

# अथ नवमोऽध्यायः ।

जन्मर्क्षमाद्यं दशमं तु कर्म साङ्घातिकं षोडशमृक्षमाद्यात् ।
अष्टादशं स्यात्समुदायसंज्ञं वैनाशिकं विंशतितस्तृतीयम् ॥१॥
यत्पञ्चविंशं खलु मानसं तत् षड् ऋक्ष एवं पुरुषस्तु सर्वः ।
राज्ञो नवर्क्षाणि वदन्ति जातिदेशाभिषेकैस्सहितानि तानि ॥२॥
राज्ञोऽभिषेकर्क्षमुशन्ति मिश्रं[1] साधारणे द्वे सह षड्भिराद्यैः ।
किन्त्वत्र दोषाश्च गुणाश्च सर्वे प्रधानमेकं पुरुषं भजन्ते ॥३॥
कूर्मोपदिष्टानि हि देशभानि राज्ञोभिषेकेऽङ्गनि चाभिषेकम् ।
या जातयश्चेति भवन्त्यतस्ता वर्गस्य वक्ष्यामि यथा क्रमेण ॥४॥
पूर्वात्रयं सानलमग्रजानां राज्ञां तु पुष्येण सहोत्तराणि ।
सपौष्णमैत्रं पितृदैवतं च प्रजापतेर्भं च कृषीवलानाम् ॥५॥
आदित्यहस्ताभिजिदश्विनानि वणिग्जनानां प्रवदन्ति भानि ।
मूलत्रिनेत्रानिलवारुणानि भान्युग्रजातेः प्रभविष्णुतायाः ॥६॥
सौमेन्दुचित्रावसुदैवतानि सेवाजनस्वाम्यमुपागतानि ।
सार्पं विशाखश्रवणे भरण्यश्चाण्डालजातेरिति निर्दिशन्ति ॥७॥
रविरविसुतभोगमागतं क्षितिसुतभेदनवक्रदूषितम् ।
ग्रहणगतमथोल्कया हतं नियतमुषाकरपीडितं च यत् ॥८॥
तदुपहतमिति प्रचक्ष्यते प्रकृतिविपर्ययायातमेव वा ।
निगदितपरिवर्गदूषणं कथितविपर्ययगं समृद्धये ॥९॥
रोगाभ्यागमवित्तनाशकलहाः संपीडिते जन्मभे
सिद्धिं कर्म न याति कर्मणि हते भेदस्तु साङ्घातिके ।
द्रव्यस्योपचितस्य सामुदयिके संपीडिते संक्षयो
वैनाशे च भवन्ति कार्यविपदश्चिन्तासुखं मानसे ॥१०॥[2]
निरुपमद्रुतभे निरामयः सुखभाक् पुष्टतनुर्धनान्वितः ।
षडुपद्रुतभो विनश्यति त्रिभिरन्यैश्च सहावनीश्वरः ॥११॥
न भवति शरीरपीडा यस्य विनाशीति गर्भपीडायाम् ।
तस्य शरीरविपत्तिः पाकान्ते देवलः प्राह ॥१२॥[3]

---

१. ०शान्त्यमिश्रं for ०शन्ति मिश्रं K.
२. P1 puts the 10th verse after the 7th.
३. This verse in missing in P1.

सर्वेषां पीडायां दिनमेकमुपोषितोऽनलं जुहुयात् ।
सावित्र्या क्षीरतरोः समिद्भिरमरद्विजानुरतः ॥१३॥
गोक्षीरसितवृषशकृन्मूत्रैः[1] पत्रैश्च पूर्णकोशायाः ।
स्नानं जन्मनि दुष्टेष्वाचारवतां हरति पापम् ॥१४॥
कर्मणि मधुघृतहोमो दशाहमक्षारमद्यमांसादः ।
दूर्वाप्रियंगुसर्षपशतपुष्पशतावरीस्नानम् ॥१५॥
साङ्घातिकेऽनुतप्ते मांसमधुक्षौर्यमन्मथांस्त्यक्त्वा ।
दान्तो दूर्वां जुहुयाद्दानं दद्याद् यथाशक्ति ॥१६॥
समुदायकेऽभिदद्यात् काञ्चनरत्नान्युपद्रुते धिष्ण्ये ।
वैनाशिकेऽन्नपानं वसुधां च गुणान्विते दद्यात् ॥१७॥
मानसतापे होमः सरोरुहैः पायसैर्द्विजाः पूज्याः ।
गजमदशिरीषचन्दनबलातिबलवारिणा स्नानम् ॥१८॥

इति श्रीवराहमिहिराचार्यकृतायां योगयात्रायां नक्षत्रकेन्दुमनामाध्यायो नवमः ॥

---

## अथ दशमोऽध्यायः ।[2]

आराधयिषुणा नराधिपं वारणाश्रितमिदं शुभाशुभम् ।
ज्ञेयमादरवता विपश्चिता वारणेषु नृपतेर्जयस्थितिम् ॥१॥
सार्द्धं हस्तशतं दीर्घा सविंशं विपुला शतम् ।
चतुरस्राऽथवा वृत्ता वारी वारणवृद्धिदा ॥२॥
दशावगाहेन करा विस्तीर्णा दश चोपरि ।
अधःखातस्य पदवी हस्तमात्रा प्रकीर्तिता ॥३॥
कर्त्तव्यं पूर्वतो द्वारमुत्तरं वा शुभावहम् ।
दक्षिणं पश्चिमं वापि न कर्त्तव्यं कथञ्चन ॥४॥
मेढकः स्तम्भमातृणां वृक्षाग्रं नावनौ क्षिपेत् ।
पूर्वाग्रा चोत्तराग्रा च संयोज्या नित्यमर्गला ॥५॥
दशविस्तारतो द्वारं पार्श्वयोरस्य मातृकाः ।
चतुर्दशकरोत्सेधा निखातश्चतुरः करान् ॥६॥
षट् थरा मेढान्तरस्था मेढकाः पञ्च पञ्च च ।

---

१. ०वृषभ० for ०वृष० P., PI. २. Chapters 10-12 are wanting in PI.

चतुर्दश निखातास्ते समुच्छ्रायान् वदाम्यतः ॥७॥
षट्सप्ताष्टनवोत्सेधा दश चेति यथाक्रमम् ।
नव वा दश वा वेधा मात्रिकायाः षडङ्गुलाः ॥८॥
वेध्यहान्यावशेषाः स्युः मात्रिकाः क्रमशोऽपराः ।
इति द्वारसमासोऽयं वार्याः सम्प्रतिकीर्तितः ॥९॥

इति वारणादिलक्षणम् ॥

मध्वाभदन्ताः सुविभक्तदेहा न चोपदिग्धा न कृशाः क्षमाश्च ।
गात्रैः समैश्चापसमानवंशा वाराहतुल्यैर्जघनैश्च भद्राः ॥१०॥
वक्षोथ कक्षावलयाश्च याश्च लम्बोदरास्ता बृहतीगलश्च ।
स्थूलावकुक्षिः सह मेचकेन सैंहीव दृग्मन्दमतङ्गजस्य ॥११॥
मृगस्तु ह्रस्वाधरवालमेढ्यस्तन्वंघ्रिकण्ठद्विजहस्तकर्णः ।
स्थूलेक्षणाश्चेति यथोक्तचिह्नैः सङ्कीर्णनागा व्यतिमिश्रचिह्नाः ॥१२॥
पञ्चोन्नतिः सप्तपदस्य दैर्घ्यमष्टौ च हस्ताः परिणाहमानम् ।
एकद्विवृद्धावथ मन्दभद्रौ संकीर्णनागो नियतप्रमाणः ॥१३॥
भद्रस्य वर्णो हरितो मदस्य मन्दस्य हारिद्रकसन्निकाशः ।
कृष्णो मदश्चाभिहितो मृगस्य सङ्कीर्णनागस्य मदो विमिश्रः ॥१४॥
स्थपतिरतः प्रयतो गजशाला नरपतिमन्दिरदक्षिणभागे ।
अवनिगुणानविलोक्य विदध्यात् कृतबलिहोमसुरार्चनशान्तिः ॥१५॥
यातुधानदितिसर्पसंकुला सन्निकृष्टविबुधद्विजालया ।
शर्करास्थिचयभस्मदूषिता पार्थिवद्विरददोषदा मही ॥१६॥
किञ्चिदत्युन्नता भूः प्रशस्तद्रुमा गोभिरध्यासिता साधुमध्ये समा ।
भूरितोया घना चित्तहृग्ह्लादिनी शल्यदोषैर्विना सानुनादस्वना ॥१७॥
सुस्निग्धपल्लवद्रुमा प्रदक्षिणाम्बुवाहिनी ।
स्वराष्ट्रवृद्धिरा मही हिताय नागवाजिनाम् ॥१८॥
भद्रमन्दमृगमिश्रदन्तिनां श्वेतरक्तकनकोपमा सिता ।
भूमयो द्विरदपुष्टिवृद्धिदा भूभृतामपि यशःसुखावहाः ॥१९॥
ज्येष्ठा चतुर्विंशतिरेव हस्ता द्विघ्नूनते मध्यजघन्यशाले ।
विस्तारितास्तद्द्विगुणाश्च दीर्घाः सभाश्च विस्तारसमुच्छ्रिताः स्युः ॥२०॥
ज्येष्ठाङ्गुलानि बहुलो दशषट्सुतानि
मध्यस्तु पञ्चदशकान्यसकोङ्गुलोनः ।

स्तम्भप्रमाणविपुलाः क्रमशो निषक्ताः
प्रोक्ताङ्गुलार्धसदृशं बहुलत्वमेषाम् ॥२१॥
सर्वासु शालासु च कण्टकस्य हस्तोद्ध्र्वयुक्तः परिणाह उक्तः ।
कण्ठप्रमाणेन समुन्नतश्च तलप्रबन्धो दृढदारुबन्धः ॥२२॥
अलिन्दभित्तौ तु गवाक्षकेषु कुर्याद् गुणाद्वारकजालकांश्च ।
निर्व्यूहयुक्तासु च वेदिकासु कार्या विभूषा परतो मयोक्ता ॥२३॥
कमलोत्पलहंसयुगप्रमथैः प्रमदायुगपत्रविहंगघटैः ।
विविधैस्तरुभिः सशुकभ्रमरैः फलपल्लवपुष्पभरावनतैः ॥२४॥
व्यालककुञ्जरमत्स्यमृगेन्द्रैः कन्दमृणाललतांकुरशोभः
वारिचरै रचितो मकराद्यैः शिक्षितशिल्पिविनिर्मितरूपः ॥२५॥
द्वारोछ्रायः कुञ्जरायामतुल्यो विस्तारोऽस्य त्र्यंशहीनः स एव ।
हीनो भूयश्चात्मषष्ठांशकेन शालाद्वारं प्रागुदक् च प्रशस्तम् ॥२६॥
विचित्रनिर्व्यूहमृगेन्द्रशोभितं कपाटमेढार्गलसुप्रयोजितम् ।
सुवेदिकालंकृतमीक्षणप्रियं प्रवेशनं निर्गमनाय वापरम् ॥२७॥
चन्दनार्जुनशिरीषमधूका देवदारुसरलाञ्जनशालाः ।
रोहिणीखदिरचम्पकशाकाः स्पन्दनश्च सकदम्बविशोकाः ॥२८॥
शीताः शिवाश्च द्विपबन्धनार्थमेतद् द्रुमाः पुष्टिकरा द्विपानाम् ।
स्तम्भार्थमन्येऽपि हि सारवन्तः कार्याः प्रशस्ता गुणसम्प्रयुक्ताः ॥२९॥
पूर्वाभिमुखो निबध्यते यः क्षिप्रं प्रकरोति विक्रमम् ।
राज्ञः समरेष्वनिर्जितो दीर्घं चायुरवाप्नुयान्नरः ॥३०॥
दक्षिणादिक् वदनस्य च बन्धो जीवितनाशकरो द्विरदस्य ।
धान्यधनक्षयमाशु च कुर्यान्मन्त्रिजनस्य नराधिपतेश्च ॥३१॥
पश्चान्मुखो बन्धमवाप्य नागो नित्यं भवेद् रोगनिपीडिताङ्गः ।
नाशञ्च वित्तस्य करोति राज्ञस्तस्मात्स याम्यापरदिग्विवर्ज्यः ॥३२॥
उदङ्मुखो बन्धमुपैति नागो योऽर्थस्य वृद्धिं स करोति भर्तुः ।
प्राप्नोति पुष्टिं चिरजीवितं च सङ्ग्रामकालेष्वपराजयं स्यात् ॥३३॥
सुषिरोद्ध्र्वशुष्ककोटरकोलाक्षर्मान्थबहुलशूलाग्राः ।
मधुनिलयमूलहीनाग्रकुब्जवल्लीव्रणानुगताः ॥३४॥
वामावर्तः शृङ्गी कुणिलोऽवनतोऽनुजातविद्धश्च ।
पितृवनजः स्थूलाग्रस्त्रिकुब्जको द्रोणिकाबहुलः ॥३५॥

